॥ श्रीगुरुः शरणम् ॥

# काकदूतम् ।

इदं

चिंतामण रामचंद्र सहस्रबुद्धे

इत्यनेन विरचितं,

श्री. यशवंत भास्कर जठार बी. ए. एल्‌एल्. बी.

इत्येतैश्च

धारवाडनगर्यां

आत्मनः "कर्णाटक प्रिंटिंग वर्क्स" मुद्रणालये

संमुद्र्य प्रकाशं नीतम् ।

रा. श. २४३.

# TO AN INDIFFERENT PUBLIC.

In a country where it is more profitable to work *at* the press than *for* it, a little book like mine needs no preface. However as it is usual to have one, I dare not go against the tradition.

This is my second attempt to appear before the public. The चहागीता as it was a parody of the celebrated गीता this attempt tries to follow another celebrated Sanskrit classic. There is, I am aware, a difference of opinion with regard to such writings. But a few appreciative friends, like Pandit Tammanshastri Nawalgund and Nageshshastri Vidyalankar have said a good word about the चहागीता : and it is this encouragement that has put me forth on this new venture. The चहागीता protested against a lesser evil in appearance but the evils attacked in this book have very few sensible advocates. The main points being agreed upon, the execution of this little piece of work will be a matter of taste Go therefore, my new child, and try to please with your bablings those that will condescend to throw a look on you.

The local colouring given to the theme of these verses is immaterial. The conditions which are described, may be found in any place taken at random. For a charge of my having broken Priscan's—no, Panini's

would be better—head my defence is that I have allowed the Sandhi rules to remain unattended with a view to an easier understanding of the Sanskrit: the verses read with the necessary and obvious corrections, I can assure, will not violate any rules of prosody.

Besides the above mentioned two Shastris, who have helped me often with their suggestions, I have to thank Mr. Y. B. Jathar B. A., LL. B., Proprietor of the K. P. Works who has done all that a liberal minded man of business could do.

DHARWAR
Shri Shankar Jayanti
Raj Shaka 243

C. R. SAHASRABUDHE.

---

☞ ***Please see erratta and additional notes at the end.***

अथ समर्पणम् ।

श्रीधीशक्तिमतां वरोऽपि किल यो गर्वेण न स्पृश्यते,
तिष्ठत्यग्रत एव भारतभुवो यः शं चिकीर्षुः सदा ।
लब्धं येन पदं स्थिरं हृदि सतां, यः कर्मयोगेश्वरः,
कस्याप्यस्य महात्मनः पदयुगे भक्त्याऽर्प्यतेऽसौ कृतिः ॥

॥ श्रीगुरुः शरणम् ॥

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः ॥

# काकदूतम् ।

कश्चित् विप्रो दुरितचारितासक्तधीस्तंतुपुर्यां
अन्ह्येकस्मिन् प्रबलविसकीसेवनान्नष्टबुद्धिः ।
कांचित् मार्गेऽभ्यमृशदबलां, दंडयित्वा ततोऽद्वं
कारावासं तमधमतमं प्राहिणोत् प्राड्विवाकः ॥ १ ॥

मध्याह्ने वंदीचितवसनस्तत्र तिष्ठन् कदाचित्
स्कंधे कृत्वा करधृतपिटेश्छिन्नकेशः खनित्रम् ।

---

१ धारवाडनगरे । २ अह्नि+एकस्मिन् One day. ३ मद्यविशेषः Strong Whisky. ४ गतधीः । ५ अस्पृशत् । ६ न्यायाध्यक्षः । ७ With the prisoner's dress. ८ While living there (in the prison). ९ करे धृतः पिटः (Basket) येन सः । १० खनित्रं spade स्कंधे कृत्वा निधाय ।

कर्मस्थानात् निगडितपदो रक्षकाधिष्ठितोऽसौ
प्रत्यागच्छन्नवकरचये काकमेकं ददर्श ॥ २ ॥

क्षिप्त्वा चक्षुश्चपलमभितो, लीलया तीक्ष्णचंच्वा
कीटान् स्वीये जठरदहने जुह्वतं गाढलौल्यात् ।
अक्ष्णा काणं तिमिरवपुषं तं प्रणम्येत्युवाच
सख्यं नीचैः सह हि घटते प्रायशो नीचबुद्धेः ॥ ३ ॥

जाने जातं भुवि बलिभुजां अन्वये त्वां प्रसिद्धे,
'युष्मज्जातेः परहितपरा धीरिति' प्रत्ययो मे ।
पिंडं स्पृष्ट्वा "तव मृतपिता वीतरागः किलेति"
युष्मास्वेको दशमदिवसे सूचयामास मां हि ॥ ४ ॥

तस्मात् दौत्ये प्रकृतिसरलं कामये त्वां नियोक्तुं
चित्ते कृत्वा "मम विफलतां न व्रजेत् प्रार्थनेति" ।
स्थाने युष्मान् भुवि 'परभृतः' कोशकाराः किलाहुः
तत्संदेशं हर मम, विधेह्यर्थवच्च स्वनाम ॥ ५ ॥

---

१ From the place of work. २ With fetters in feet. ३ Guarded by Police. ४ Dung-hill. ५ अभितः चपलं चक्षुः क्षिप्त्वा Casting sight on all sides. ६ उदराग्नौ । ७ With greed. ८ तिमिरं तम इव कृष्णं वपुः देहः यस्य तं काकम्। ९ काकानाम्। १० वंशे। ११ Ball of cooked rice. १२ पितुर्मरणात् दशमे दिने। १३ The work of carrying message. १४ इच्छामि। १५ परान् अन्यान् खगान् (कोकिलान्) बिभ्रति पोषयंति इति परभृतः। कोकिलांडानि काकैः पोष्यंते इति प्रसिद्धम्। १६ स्वनाम "परभृत" इतिनाम अर्थवत् यथार्थं विधेहि ।

मूर्तः स्वर्गः स किल विषयो यत्र याहीति वक्ष्ये
यं संप्रेक्ष्याध्वानि खग ! तथा नैकरम्यस्थलानि ।
यायात् दृष्टिस्तव सफलतां, अध्वखेदोऽपि न स्यात्
गंतव्यस्ते चपलगतिमन् ! केवलं क्रोश एकः ॥ ६ ॥

प्राचीं पूर्वं व्रज दिशमितो, येन खे संचरंतः
कंका नैके विटपिशिखरे बांधवाश्च त्वदीयाः ।
आरोहेयुर्नयनसरणिं, यत्र तिष्ठत्यधस्तात्
एकं स्थानं, प्रतिदिनमहं यन्निशि प्रागगच्छम् ॥ ७ ॥

पण्यागारे पल्लमिह गोः कुत्रचित्, क्वाप्यजस्य,
स्थानेऽन्यस्मिन् शशहरिणयोर्दोरके लंबमानम् ।
क्रय्या मीनाः पिटकनिहिताः कुक्कुटाः क्वापि काक !
तेषामंडान्यपि कलरवाः लोचनं ते हरेयुः ॥ ८ ॥

तीक्ष्णच्छुर्या यवनयुवकाश्छिदते केऽपि मांसं,
केचित् वृद्धाः पलितशिरसस्तुंदिला लंबकूर्चाः ।
भीमाकाराः परुषवचनाः क्रेतुरादाय मूल्यं
तस्यै क्रेव्यं करयुगतले तोलयित्वाऽर्पयंति ॥ ९ ॥

---

१ Place स्थलम् । २ So that. ३ आकाशे । ४ गृध्राः । ५ अनेके । ६ वृक्षशिखरे । ७ काकाः इत्यर्थः । ८ निशि निशायाम् । ९ मांसम् । १० In this shop. ११ धेनोः । १२ रज्ज्वाम् । १३ Hanging. १४ Fit to be sold. १५ Placed in baskets. १६ Cocks. १७ Pigeons. १८ तरुणयवनाः । १९ जरया । शुक्लशिरसः । २० Whose beards are long. २१ क्रेतुः सकाशात् मूल्यं आदाय गृहीत्वा । २२ क्रेतुः हस्ते २३ मांसम् । [illegible]

त्वद्वच्छ्यामा महिषनयनाः स्थूलकृष्णाधरोष्ठयः
कुक्षिस्थौल्यात् अलसगमना वभ्रटा भेरिमध्याः ।
घूकस्वानाः करटिरदना निर्घृणा अल्पकेश्यो
घोराकारा यवनललना दृक्पथं ते व्रजेयुः ॥ १० ॥

तासां काश्चित् पिटगतझषांस्ताम्रचूडांस्तदंडा-
न्यन्याः काश्चित् बहुविधखगान् काक ! विक्रीणतेऽत्र
मा मा भैषीः खगवर ! मनागप्यमूभ्यो वधूभ्यः ,
प्रायः सर्वो जगति हि जनः स्निह्यति स्वीयवर्णे ॥ ११ ॥

वृक्षे स्थित्वा कमपि समयं तत्र विश्रामहेतोः
पर्याप्तं तामनिमिषदृशा रम्यशोभां निपीय ।
युक्त्या चंच्वां पललशकलं वांऽडजं वा विधाय
प्राचीमाशां पुनरपि सखे ! त्वं प्रतिष्ठस्व वेगात् ॥ १२ ॥

सोडावॉटर्-गदगजबिडी-सीगरेट्-म्याचबॉक्स-
चीरोट्-चुट्टा-प्रभृति-सुमतिक्रेयवस्तुव्रजानाम् ।

---

१ Black as you. २ महिषस्य ( Buffellow ) नयने इव नयने यासां ताः । ३ उदरस्थौल्यात् । ४ नतनासिकाः Flat-nosed. ५ भेरिः इव मध्यं ( Waist ) यासां ताः । ६ घूकानां ( Owl ) स्वानः ध्वनिरिव स्वानो यासां ताः । ७ करटिनो गजस्य इव(दीर्घाः) रदनाःयासां ताः । ८ मत्स्यान् । ९ Cocks. १० वर्ण has got two meanings *i. e.* Cast and colour. ( Mark here the word ' त्वद्वच्छयामाः ' in the 10th verse ) ११ विश्रांतिहेतोः । १२ To your heart's content. १३ With steady eye. १४ Taking in beak. १५ अंडजं मत्स्यम् । १६ [illegible]नाम् ।

पण्यावासा विमलमुकुरालंकृता नैकसंख्या
रम्या मार्गे सख ! उभयतो मानसं ते हरेयुः ॥ १३ ॥

“ अस्म्यंधोऽहं, विगतचरणाऽहं, न मे कोऽपि नाथो,
ग्रस्तो रोगैरहमहह ! मे दत्त किंचित्, शिवं वः ” ।
इत्थं सूचैः करुणवचनैर्यात्रिकान् याचमानाः
नैका दीनाः पुरुषललनाः स्वागतं ते विदध्युः ॥ १४ ॥

एवं गच्छन् करट ! पुरतो द्रक्ष्यसि स्थानमेकं
यन्नैवालं फणिपतिरपि श्लाघितुं, का कथा मे ? ।
नित्यं वृंदं विहरति शुनां कुक्कुरीभिर्यदग्रे
**सुब्रह्मण्याश्रम** इति च यत् सानुरागं वदंति ॥ १५ ॥

**धारापुर्यां** विहग ! विरलस्तादृशो, यो न वेत्ति
नूनं दिव्याश्रमपदमिदं, सर्वभोगैकभूमिम् ।
जाने जातो जगति स वृथा, निर्मिता अत्र येन
नास्वाद्यंते सकृदपि मुदा खाद्यपेयाः पदार्थाः ॥ १६ ॥

किं सा चैक्लिः, किमु स चिवंडा, किं भंजिः, किं चहाऽसौ,
किं कॉफी सा, धिरंडि किमु, किं बिस्किटः, किं स रोटः ? ।
मन्येऽमूनि त्रिदिवनिलये दुर्लभानीति देवाः
जाता धारापुरवसतयो मानवा भोक्तुकामाः ॥ १७ ॥

---

१ Shops २ विमलैः मुकुरैः आदर्शैः अलंकृताः ३ On both the sides of the street. ४ Passers by. ५ फणिपतिः महाशेषः अपि नैव अलं समर्थः । ६ समूहः । ७ Of dogs. ८ Bitch. ९ यस्य स्थानस्य अग्रे पुरतः । १० खाद्यविशेषाः । ११ चाहाप्रमुखाणि वस्तूनि । १२ स्वर्गलोके ।

अस्मिन् स्थाने मुखधृतब्रिडिः, फ्रॉकमेकं दधानः
कश्चित् कॉफीं पचति युवकः, कोऽपि टीं, कोऽपि कोकोम्
कश्चित् सूदो जिलेबिमपरो निर्मिमीते चिरोटान् ,
कश्चित्तैले सुरभिभजिकाः भृज्जते, कोऽपि चेक्लीः ॥ १८ ॥

शूद्रा विप्रा यवनवणिजो विस्मृतस्वीयवर्णाः
सूत्रस्यूता इव च सुतरामासनेषूपविश्य ।
खाद्यान् पेयान् विदधति सखे ! नामशेषान् पदार्थान्
कोशान् स्वीयान् द्रविणरहितान् आश्रमेशं च धन्यम् ॥१९॥

श्रुत्वा मित्र ! श्रवणमधुरं वर्णनं मत्त एतत्
" अंतर्यायां " इति समुदयेत् कौतुकं मानसे ते ।
मा गा मा गा, न हि तदधिपः केवलं ताडयेत्त्वां,
किंत्वास्ये ते स्थितमपहरेत् हंत ! मांसस्य खंडम् ॥ २० ॥

तस्मात् स्थित्वा क्षणमिह ततो याहि कासारमंगं !
नासौ दूरे विहग ! निकषाश्रमं कूलमस्य ।

---

१ Frock कवचविशेषः । २ धारयन् Wearing. ३ खाद्यविशेषाः । ४ तळणें Fry. ५ अहं विप्रः अहं शूद्रः इति विस्मृतः स्वीयो वर्णो जातिः यैः ते शूद्रादयः । ६ As if sewed by thread ७ भक्षयंति । ८ खाद्यपेयान् पदार्थान् नामशेषान् विदधति, कोशान् ( pockets ) द्रविणरहितान् ( Empty of money ) विदधति आश्रमेशं सुब्रह्मण्यं च धन्यं विदधति कुर्वंति । ९ सुब्रह्मण्यः । १० ते तव आस्ये मुखे स्थितं वर्तमानम् । ११ तडागम् । १२ भोः । १३ अस्य ( मुक्तासरोनाम्नः ) तडागस्य कूलं तीरं आश्रमं निकषा [illegible] समीपे एव अस्तीति शेषः ।

तीरे शांते गतभयममुष्यापनीयाध्वखेदं
स्वीये कंठे कुरु मुखगतं लीलया क्रव्यखंडम् ॥ २१ ॥

एतस्यांभो यवसहरितं पंकिलं पूतिगंधि
कीटा एनं सततमकुतःसाध्वसा आवसंति ।
दूरे पानं, पुनरिह जनैरंबु न प्रेक्ष्यतेऽपि
तस्मात् बंधो ! गदितमभयं स्थानमेतत्सदैव ॥ २२ ॥

नासीदन्या गतिरिह पुराऽमुं तडागं विनेति,
मेने पौरैर्हृदयमपरं काक ! कासार एषः ।
सर्वेषा पूः सलिलनलिकाव्याकुला किंचिदानीं,
यावत् कार्यं जगति कुटिले तावदेवादरोऽपि ॥ २३ ॥

मंदं मंदं खगवर ! दिशं दक्षिणां याहि पश्चात्
यद्यप्यद्धा न मम ललनागेहगाम्येष मार्गः ।
दूरेणापि प्रियतम ! पथा येन याहीति वच्मि
रम्यो नूनं स इह नगरे सर्वखेदापहारी ॥ २४ ॥

---

१ Fearlessly, २ अमुष्य कासारस्य शांते तीरे। ३ दूरीकृत्य । ४ मार्गश्रमं । ५ गिल। ६ अंभः जलम् । ७ तृणहरितम् (Green with grass. ८ Muddy. ९ गतभयाः । १० Water-pipes. ११ Full of १२ यद्यपि though अद्धा properly speaking. १३ मम ललनायाः प्रेयस्या मन्दिरस्य इति यावत् । १४ सः पंथाः मार्गः ।

दग्धः कामो जगदधिपतेर्वैरशुद्धावधृष्टः

भृंगज्यायां कुसुमविशिखान् पंच संधाय कोपात् ।

सज्जो वृद्धेष्वपि पथि सदा प्रक्षिपंस्तिष्ठतीह,

श्रेष्ठे क्रुद्धः प्रहरति जनो दुर्बलान् मौढ्यतो हि ॥ २९ ॥

वीथ्यामस्यां प्रबलमदनाधिष्ठिता वारवामाः

तिष्ठंतीति प्रियसख ! इमां **कामवाटीं** ब्रुवंति ।

आसां नूनं दशशतमुखोऽप्यप्रभुर्वर्णनाय

कोऽहं जंतुः ? शकुनः ! पुरि ताः केवलं ता इवेहे ॥ २६॥

वेश्या एताः कनकसदृशैः पैत्तलैर्मंडनौघैः

कंठं शीर्षं द्विजवर ! करावंगुलीराम्रवेणिम् ।

मुक्तातुल्यैर्मधुजरचितैर्भूषणैः कर्णनासं,

कांच्या मध्यं, चरणयुगलं नूपुराभ्यां विभूष्य ॥ २७ ॥

---

१ वैरशुद्धौ + अधृष्टः अशक्तः Unable to take vengeance upon God शिव । २ भृंगा एव ज्या ( Bow-string ) तस्याम् । कुसुमानि एव विशिखान् बाणान ३ वीथ्यां मार्गे । ४ कामातिशयाक्रांताः । ५ वेश्याः । ६ इमां वीथीम् । ७ कामनकट्टा । ८ महाशेषः । ९ इह अस्यां पुरि नगर्याम् । १० २९ तमे श्लोके तिष्ठंति इत्यस्य कर्त्र्यः । ११ Made of brass. १२ अलंकारसमूहः । १३ आम्रवेणिं अंबाडा बुचडा । १४ Made of wax. १५ मेखला Belt. १६ Waist.

पोल्कं चित्रं, परिलघु सितं चारु चीटं वसानाः,
तांबूलस्याविरतमशनात् रक्तवर्णाधरोष्ठ्यः ।
कृत्वा वक्त्रं प्रकृतिहरिणं पाटलं, धारयंत्यो
भाले सूक्ष्मं गिरिजतिलकं, नेत्रयोरंजनं च ॥ २८ ॥

दूरीकृत्यांशुकमनुपलं, लीलया दर्शयंत्यो
धूर्ताः पीनीकृतकृशकुचौ सस्मितं कामुकेभ्यः ।
वामे पाणौ निहितचिबुका, वीक्षमाणा वयस्थान्,
गेहद्वारे चपलनयना हंत ! तिष्ठंति सायम् ॥ २९ ॥

यावत् कामी विशति सदनं, तावदेवावलंब्य
पाणौ एनं नयति गणिका गर्भगेहं हसंती ।
दीपो यत्र ज्वलति, वितते कंबले तालवृंत-
ष्ठीवग्राहौ पुटकमुकुरौ गोचरास्ते भवेयुः ॥ ३० ॥

अंगुल्यात्रोपविशतु भवान् एवमादिश्य, किंचित्
आस्ते दूरं स्वयमपि, ततो वीटिकां निर्मिमीते ।

---

१ Bodice. २ वस्त्रविशेषः । ३ Eating-leaves with bittle etc. ४ अविरतं, सदा । ५ प्रकृत्या निसर्गतः हरिणं पांडु ( pale ) वक्त्रं मुखं केनापि वर्णेन पाटलं श्वेतरक्तं ( rosy ) कृत्वा। ६ अभ्रकम् । ७ अंशुकं Border. ८ अपीनौ पीनत्वेन कृतौ तादृशौ कृशौ च कुचौ स्तनौ । वेश्यानां स्तनौ निसर्गतः कृशौ, किंतु ताः कंचुकांतरे कार्पासादिकं निधाय तौ पीनीकुर्वंतीति लोकप्रसिद्धिः । ९ Chin. १० तरुणान् । ११ Inner-apartment. १२ Fan व्यजनम् । १३ Pot to spit ( पीकदाणी ). १४ Box (चौफुला ) १५ आदर्शः । १६ अत्र भवान् उपविशतु एवं इति अंगुल्या आदिश्य । १७ किंचित् स्थलं दूरं आस्ते उपविशति । १८ तांबूलं ( विडा .)

दत्वा तां तत्करकिसलये, सादरं च प्रणम्य,
सभ्रूभंगं करट ! रमते गातुमुच्चैः सवीणा ॥ ३१ ॥

श्रुत्वेयत्तत् विरमयति तां साग्रहं सोऽपि गानात्
" आयास्यालं पिकमधुकले ! नन्विति " प्रीतचेताः ।
मंदं मंदं किमपि च ततस्तेन पृष्टा सरागं
शय्यागारं विशति सधना पाणिनाऽलंब्य सा तम् ॥ ३२ ॥

तत्राप्यादौ मृदुलशयने तं करेणोपवेश्य
वामांकेऽस्योपविशति ततः कुर्वती चारुहास्यम् ।
चुंबंती तद्वदनमसकृत् तं परिष्वंज्य गाढं
" त्वं मे प्राणास्त्वमसि हृदयं वल्लभेति " स्तवीति ॥ ३३ ॥

सोऽपि श्लिष्यन् दृढतरममूं पीडयंस्तत्कुचौ च
स्वैरं तृष्णातुरवदधरं संपिबत्यंधचित्तः ।
सूत्रस्यूताविव मिथः उभौ गाढमालिंग्यमानौ
पश्चात् प्रेम्णाऽविरलितमुखौवावृतांगौ शयाते ॥ ३४ ॥

---

१ वीटिकाम् | २ तस्य कामुकस्य करे | ३ वीणां ( Flute ) गृहीत्वा | ४ गणिकाम् | ५ कामी | ६ सप्रेम | ७ कामिना दत्तं धनं गृहीत्वा इत्यर्थः | ८ वेश्या ३३ तमे पद्ये 'स्तवीति' च इत्युभयोरपि कर्त्री । ९ असकृत् अनेकशः। १० आलिंग्य | ११ परस्परं |१२ अविरलिते मुखे ययोः तौ उभौ वेश्याकामुकौ | १३ आवृतं आवरणवस्त्रेण आच्छादितं अंगं ययोः तौ |

" रूपाजीवाः प्रकृतिकृपणा दुष्टचित्ताः श्मशान-
भूवत्त्याज्या " इति जडधियो हंत ! जल्पंतु कामम् ।
मान्या मन्ये पुनरहममूः, अप्सरोभ्यो हि यासां
संभूतिस्ताः खग ! वद कथं नन्वसत्यो भवेयुः ? ॥ ३५ ॥

यं विद्वांसो जनिमरणयोः संततेर्हेतुमाहुः,
संसारान्नः सततपतितान् नूनमुद्धृत्य तस्मात् ।
दारापत्यादिषु विदधते वीतरागान् दायाद्री
या वेश्यास्ताः खग ! वद कथं नन्वसत्यो भवेयुः ? ॥३६॥

छित्वा गाढान् जनकजननीसूनुकन्यादिपाशान्
भ्रातर् ! दारान् नरकविवृतद्वारकल्पान् जवेन ।
संत्याज्यास्मान् विदधाति ततो दृष्टमात्राः प्रमुक्तान्
या वेश्यास्ताः खग ! वद कथं नन्वसत्यो भवेयुः ? ॥३७॥

पूर्वं बंधो ! जगति मुनयो यत्पदप्राप्तिहेतोः
मत्वा प्राणांस्तृणमिव वने तप्तवंतस्तपांसि ।
जारं प्रेम्णा विदधति निजं तं सहस्राक्षमेव
या उत्पाद्य व्रणसमुदयं, ताः कथं नन्वसत्यः ? ॥ ३८ ॥

---

१ रूपेण आजीवंति इति रूपाजीवाः वेश्याः। २ उत्पत्तिः ३ असाध्व्यः। ४ यं संसारम्। ५संततिः Series तथाच श्रीशंकरभगवत्पादाः 'पुनरपि जननं पुनरपि मरणं' इत्यादि ६ मोचयित्वा। ७ तस्मात् संसारात्। ८ अस्मान् दारान् संत्याज्य Having caused us to abandon our wives. ९ यस्य इंद्रस्य पदस्य प्राप्तिहेतोः। १० Lover. ११ इंद्रमेव। इंद्रोहि गौतमशापात् सहस्रव्रणो जात इति प्रसिद्धिः। १२ वेश्याः। १३ नायिकाः।

धीमंतो यज्जगति सकलानर्थहेतुं वदंति
पापे यस्मिन् सति, बहु भयं लोकतः पुत्रतोऽपि।
हृत्वा तन्नो वसु विदधते लीलया वीतचिंतान्
या वेश्यास्ताः खग ! वद कथं नन्वसत्यो भवेयुः ? ॥ ३९ ॥

यच्छारीरं प्रियसख ! बलं संततोन्मादबीजं,
यस्य प्राप्त्यै घृतगुडपयःशर्कराः संहरामः ।
हृत्वा तन्नो वयसि तरुणे कुर्वते वृद्धवृद्धान्
या वेश्यास्ता वद खग ! कथं नन्वसत्यो भवेयुः ? ॥ ४० ॥

यासां संगात् बहुविधगदैः पीड्यमाना युवानः
आक्रंदंतो जननकरणान्यौषधैः पूरयंति ।
एवं याभिर्महदुपकृतं डॉक्टराग्रेसराणां
ताः सद्वेश्या वद खग ! कथं नन्वसत्यो भवेयुः ? ॥४१॥

यज्जायंते पुनरपि मृतास्तत्र वीर्यं निदानं,
नो चेत्, याता मरणमखिला मोक्षमेवागमिष्यन् ।
एवं रेतः परपदगतेरंतरायं हरंति
या वेश्यास्ता वद खग ! कथं नन्वसत्यो भवेयुः ? ॥ ४२ ॥

---

१ यत् धनम् । २ पुत्रादपि धनभाजां भीतिः इति श्रीशंकरभगवत्पादाः । ३ शरीरसंबंधि यत् बलम् । ४ तत् बलम् । ५ अस्मान् । ६ जननेंद्रियाणि । ७ याभिः वेश्याभिः । ८ मृतस्य जीवस्य स्वर्गसुखाद्युपभोगानंतरं आकाशवायु-मेघवृष्टिधान्यादिरूपेण अधः अवतीर्णस्य प्रारब्धवशात् कस्यांचित् वीर्यद्वारा मातुरुदरे पुनरुत्पत्तिरिति श्रुतिषु आम्नातम् । तथा च छांदोग्योपनिषत्--' यो यो ह्यन्नमत्ति यो रेतः सिंचति तत् भूय एव भवति ' इति ।९. एवं इत्थं परपदगतेः मोक्षस्य अंतरायं विघ्नरूपं यत् रेतः वीर्यं तत् या वेश्या हरंति अपहरंति ।

रेजे[1] तस्यां कमलनयना काऽपि मे कामवाञ्यां,
यस्यां सक्तः सततमभवं हंत ! शुन्या[2]मिव श्वा ।
आसीद्यद्यन्मम तदखिलं नामशेषं विधाय
या मां चिंतो[3]विकलमकरोत्, तां कथं विस्मरामि ? ॥४३॥

तन्वंगीं यां हृदयमपरं मामकं खल्वमन्ये
यस्या आज्ञा[4] स्वशिरसि मया नित्यमेव व्यधायि ।
गेहं यस्या अहमगणयं वैजयंतं[5] मघोनो[6]
या विस्रंभ[7]स्थलमहह ! मे, तां कथं विस्मरामि ? ॥ ४४ ॥

यस्यास्तन्व्या मलिनवसनं प्रत्यहं क्षालयंतं
यां चार्वंगीं प्रतिदिनमहो ! स्नापयंतं जलेन !
यस्याः पादौ[8] शकुन ! निशि संवाहयंतं[8] च धन्यं
आत्मानं खल्वजगणमहं, तां कथं विस्मरामि ? ॥४५॥

अंघ्री[10] यस्या अहमकरवं मूर्ध्नि कोपं गताया
लत्ताघातानसहिषि[11] भृशं साट्टहासं[12] यदीयान् ।
मोदाद्यस्याः परुषवचनान्याशिषो[13] नन्वमन्ये
यत्प्रेमैवं मयि निरुपमं, तां कथं विस्मरामि ? ॥ ४६ ॥

---

१ अशोभत । २ शुनी Bitch. ३ चिंताहीनम् | ४ आज्ञा पालिता | ५ वैजयंत इति इंद्रप्रासादनाम । ६ इंद्रस्य | ७ विश्वासस्थलम् । ८ पादौ संवाहय, पाय चेपणें ९ अगण्यम् | १० अंघ्री मूर्ध्नि कुरु=नमस्कुरु । ११ असहे Endured. १२ अट्टहासेन सहितं यथा स्यात् तथा With great laugh. १३ आशीर्वादान् Blessings.

रात्रौ बंधो ! समविशमनु प्रत्यहं यां प्रसुप्तां,
प्रातर्यस्याः प्रतिदिनमहं पूर्वमेवोदतिष्ठम् ।
याऽभुंक्ताहं यदि समपचं, प्राहरन्मां च नो चेत्
यत्प्रेमैवं मयि निरुपमं, तां कथं विस्मरामि ? ॥ ४७ ॥

जायां पुत्रं पितरमशपत् कोऽपि चेत् मातरं वा
न भ्रातर् ! मे हृदि समुदभूत् लेशमात्रोऽपि कोपः ।
उक्ते यां प्रत्यपसर ततः स्वल्पमित्येव केना-
प्यस्मत्क्रोधोऽव्रजदतिभुवं, तां कथं विस्मरामि ? ॥ ४८ ॥

दारान् सूनुं जनकमपि च भ्रातृवर्गं प्रसूं च
श्वश्रूं कन्यां श्वशुरमपि च त्याजयित्वा हठात् या ।
चक्रे स्नेहात् करट ! हृदयं संसृतेर्मे विरक्तं
यत्प्रेमैवं मयि निरुपमं, तां कथं विस्मरामि ? ॥ ४९ ॥

एवं भूतां सकलसुगुणालंकृतां प्रेयसीं तां
जातासूयः सुखिनि मयि वा, तद्गुणैर्मोहितो वा ।
कालः क्रूरः स्वपुरमनयत् हंत ! मे मंदभाग्यात्,
अन्येषां हि प्रकृतिकृपणा नैव सौख्यं सहंते ॥ ५० ॥

---

१ अस्वपम् Slept २ 'ततः स्वल्पं अपसर' इत्येव यां वेश्यां प्रति केनापि उक्ते अस्मत्कोपः अतिभुवं अव्रजत् वयं अत्यंतं कुपिता अभवम | ३ मातरम् | ४ बलात्कारेण । ५ संसारात् | ६ वेश्यां 'अनयत्' इत्यस्य कर्म | ७ यमः | ८ यमलोकम् |

दर्शं दर्शं जलजडदृशा मां प्रिया सा मुमूर्षुः
दत्वा पाणौ निजदुहितरं दिव्यकादंबरीं मे !
"मा ते कांत ! क्षणमपि भवत्वेनया विप्रयोगः"
इत्याशीर्भिः परिजनमिमं स्वं ममारानुगृह्य ॥ ९१ ॥

एवं कांतास्मरणवशतः साश्रुकंठोऽधचेता
भ्रांतश्चिंतास्तिमितनयनो गाढमूर्च्छाभिभूतः ।
कॉ कॉ केति श्रवणपरुषैरारवैः स्नेहबुध्या
काकेनाश्वासित [10]इति पुनर्वि[11]प्रबंधुः स आह ॥ ९२ ॥

एवं शोभां नयनमधुरां वीक्ष्य तां कामवाञ्छा:
पूर्वं प्राचीं दिशमभिमुखस्त्वं प्रतिष्ठस्व बंधो ! ।
यावत् [13]स्तोकं व्रजसि [14]पदवीं, [15]तावदेवाग्रदेशे
क्षेत्रे यायात् नयनसरणिं पादपो बब्बुलस्ते ॥ ९३ ॥

---

१ दृष्ट्वा । २ वेश्या ममार ( मृत्युमाप्नोत् ) इत्यस्य कर्त्री । ३ मर्तुं इच्छुः । ४ विवाहविधिना मम करे समर्प्य । ५ मदिराम् ६ एनया मदिरया ७ वियोगः । ८ आशीर्भिः आशीर्वादैः इमं स्वं स्वकीयं परिजनं सेवकं मां इति यावत् अनुगृह्य ममार । ९ आरवैः शब्दैः । १० "एवं शोभां" इत्यादि वक्ष्यमाणं । ११ सः नीचब्राह्मणः । १२ Start. १३ स्तोकं स्वल्पं । १४ मार्गम् । १५ तावदेव+अग्रदशे । १६ वृक्षः । १७ बाभूळ इति म. भाषायाम् ।

यः सीहुंडैः[1] फलभरनतैः प्रावृतो[2] मूलदेशे,
यस्याधस्तात् सरटगिरिकाः[3] सर्वतः संचरंति ।
शाखाकोटौ तृणविरचिते नीडसंघे[5] च यस्य
रौद्रा गृध्रप्रभृतिशकुना[6] नैकसंख्या वसंति ॥ ५४ ॥

स्थित्वा वृक्षे क्षणमिव सखे ! तत्र विश्रांतिहेतोः,
तुंदे[7] कृत्वा कमपि सरटं मूषकं वाऽल्पकायम् ।
सीहुंडीयं फलमतिरसं स्वैरमास्वाद्य तृप्यन्
जातोत्साहो दिशमभिमुखो याह्युदीचीं[8] सवेगम् ॥ ५५ ॥

इति पूर्वकाकः ।

---

१ तरुविशेषः निवडुंग इति म. भाषायाम् | २ Surrounded. ३ सरडा इति म. भा. ४ बालमूषिकाः । ५ Nest. ६ Birds. ७ उदरेकृत्वा Having eaten. ८ उदीचीं उत्तरां दिशं अभिमुखः With face turned to the North.

# उत्तरकाकः ।

**नमाऽम्युग्रगणाधीशं आर्यामितसुखप्रदम् ।**
**बुधानां तिलकं बालं श्रीमद्गांगाधरिं गुरुम् ॥**

यावद्यावन्निकटनिकटं मंदिरं मे प्रियाया
उत्साहं तेऽप्यधिकमधिकं वर्धयेत् द्वंद्वमेतत् ।
एकं बंधो ! सुरभिसुरभिस्तन्मुखोच्छ्वासगंधो
रौद्रश्चान्यत् कलकलरवो मत्ततत्सेवकानाम ॥ १ ॥

एवं गत्वा द्रुततरगतिः सद्म सर्वांगचारु
मत्प्रियस्या उपविश सखे ! चत्वरागारभित्तौ ।
किं तत्रत्यां अहमनुपमां तां प्रशंसामि शोभां ?
शब्दाः कोशे न खलु, बहुना किं ? क्षितौ सेव सेव ॥२॥

गजास्वामी रुधिरनयनः कज्जलश्यामकांतिः
रौद्राकारः प्रकृतिकृपणस्तुंदिलः कोलकेशः ।
दित्सुः पाणिग्रहणविधिना ताडिकां "स्वर्यतां" इ-
त्युच्चैः प्रेम्णाऽऽह्वयति सकलान् पुरुषान् चत्वरस्थान्॥३॥

---

१ सर्पापसमीपम् । २ 'एकं बंधो०' इत्यादि पुरो वक्ष्यमाणम् । ३ तस्या मे प्रियाया मदिराया मुखोच्छ्वासगंधः । ४ मत्तानां तस्या मे प्रियाया सेवकानाम् । ५ अंगणागारभित्तौ On the wall of the court yard ६ भुवि. ७ आरक्तनेत्रः । ८ कोलस्य वराहस्य केशा इव केशा यस्य सः । ९ दातुं इच्छुः १० मद्यम् Toddy

श्रुत्वा तत्त* करधृतवधूदक्षिणाः कामिनोऽपि
हर्षोत्कर्षात् अहमहमिकाक्रांतचित्ताः सवेगम् ।
दत्वा गंजापतिकरतले द्रव्यमादाय ताडीं
कंठे कुर्वंत्यमृतमिव तां श्रद्धयोत्तानितास्याः ॥ ४ ॥

ताडीपानात् गततनुधियां निस्त्रपाणां अमीषां
तास्ता लीलाः कथमिव सखे! मंदधीर्वणयेयम् ? ।
किंतु भ्रातर्! गुणसमुदयैर्हृद्यहृद्यैः किलैषां
अभ्येत्यास्मि श्रवणयुगलं चोदितश्चापलाय ॥ ९ ॥

दंडादंडि क्वचन कलहं कुर्वते मद्यमत्ताः,
हस्ताहस्ति क्वचिदपि, रदैरन्यतः, क्वापि लोष्टैः, ।
केशाकेशि क्वचन, नखैः कुत्रचित्, क्वापि मुष्ट्या,
पादत्राणैः क्वचिदपरतश्चंडपादप्रहारैः ॥ ६ ॥

गानैः केऽपि श्रवणमधुरैः रासभान् न्हेपयंति,
नृत्यैरन्ये नयनसुभगैर्मर्कटान् लज्जयंति ।
एके हासैर्विकटविकटैर्योषितो भाषयंति
केचित् गंजापतिमपि सखे! रोदनैर्भापयंति ॥ ७ ॥

---

* तत् त्वर्यतामिति गंजापतिवचनं श्रुत्वा ते कामिनः अपि ।
१ वध्वाः सुरायाः दक्षिणा मूल्यम् | २ द्रव्यं दत्वा ताडीं आदाय गृहीत्वा
३ मद्यम् Toddy ४ With their mouths opened. ५ गता
तनुधीः येषां तेषाम | ६ निर्लज्जानाम् | ७ कर्णद्वंद्वं आगत्य | ८ प्रेरितः
९ दंतैः | १० मृत्तिकाखंडैः | ११ नखैः | १२ उपानद्भिः With
shoes. १३ Make [illegible] १४ नारीः | १५ Frighten.

धावंत्यन्ये गलितवसना दिक्षु सर्वासु मत्ता:,
केचित् हृष्टा वसितवसनैर्मस्तकं वेष्टयंति ।
मित्राण्येके परुषपरुषैर्भाषितैर्भूषयंति,
थूत्कृत्यान्ये खगवर! सहाध्यायिन: स्नापयंति ॥ ८ ॥

मूर्च्छाक्रांता भुवि निपतिता मद्यपानातिरेकात्
केचित् सर्वान् सुरभिवमनैर्वासयंते दिगंतान् ।
कश्चित् नैजं वसनमपरो विच्छिनत्त्यन्यदीयं,
कोऽपि स्वीयं दहति कवचं, लीलयाऽन्यस्य चान्य: ॥ ९ ॥

" अप्यस्त्यत्रात्मज, इह पतिर्वर्तते किं मदीय: ,
संप्राप्तो न: किमिह जनको ? बाधतेऽस्मान् भृशं क्षुत् ! ।
किं कुर्म: ? का गतिरहह! नो ?, धान्यलेशोऽपि गेहे
नास्तीत्युच्चै:" कटु विलपंतो मत्प्रियाद्वारदेशे ॥ १० ॥

अंबां तातं पलितशिरसं धर्मपत्नीं सुतं च
शप्त्वा "रंडे जरठ कुलटे जारपुत्रेति " बंधो! ।
"यात, प्राणान् विजहित खरा: ! " इत्युदीर्य क्षिपंति
तेषु क्रोधादिह कतिपये पाणिलब्धान् पदार्थान् ॥ ११ ॥
( युग्मकम् )

---

१ Worn वसित..............वेष्टयंति=नेसलेलें डोक्यास गुंडाळतात.
२ संमनगंति | ३ Having split. ४ Make fragrant. ५ वस्त्रम् |
६ दारयति Tears. ७ Coat. ८ अत्यंतम् । ९ क्षुधा । १० एकादशे श्लोके वर्तमानानां "अंबा.......सुतं" इत्येतेषां विशेषणं। द्वितियाबहुवचनांतम् |
११ Having ab[illegible] १२ [illegible] १३ [illegible] १४ उक्त्वा.

इच्छुः प्राप्तुं प्रथमपदवीं सेवितांकंठमद्यो
मूर्च्छाक्रांतो धवलनयनः स्यंदिनीस्यंदिसृक्की ।
वासोहीनो नभसि नितरां दत्तदृक् व्यस्तगात्रः
आरोहेत्ते नयनसरणिं तत्र कश्चित्सुरापः ॥ १२ ॥

अंतर्यावत् क्षिपसि चपलं लोचनं, तावदेव
कूपीः पश्येः खग ! बहुविधाः काचमंजूषिकासु ।
या आकंठं पिहितवदनाः पूरिता मत्प्रियार्याः
तैस्तैः स्वैरतिसुरभिभिः व्हिस्कीबीरप्रधानैः ॥ १३ ॥

मध्ये गोलाकृति गुरुतरं टेबलं शुभ्रवास–
श्छन्नं, यस्योपरि बहुविधाः स्थापिताः काचकंपाः ।
वर्ण्यः पात्रैर्भजिविसकिटैर्भूषिताः संति यत्र,
रारोजंते यदिह परितः खुर्चयो वेंचकोचाः ॥ १४ ॥

---

१ Wishing to get the 1st number. २ धवले नयने यस्य सः ३ स्यंदिनीं स्यंदयत इति स्यंदिनीस्यंदिनी । तादृशे सृक्किणी यस्य सः स्यंदिनीस्यंदिसृक्की ४ Necked. ५ With the sight at the sky. ६ With limbs stretched at random. ७ Shall fall to your sight. ८ Drunkard. In this verse इच्छुः.......... व्यस्तगात्रः are the adj. to सुरापः ९ Bottles १० Cupboards made of glass. ११ & १३ Filled to the brim Adj. to कूपीः १२ Cocked. १४ सुरायाः १५ पूरिता इत्यनेन संबंधः १६ Round. १७ Table. १८ Covered with whith cloth adj. to टेबलम् १९ Cups of glass. २० Sowsers. २१ अतिशयेन । शोभंते २२ [illegible] यस्य टेबलस्य समंतात्

साक्सौ बूटौ निजचरणयोः पिंगलौ धारयंतः
प्यांट्लोन् शर्ट-कोट्-प्रभृतिवसनच्छन्नपादादिगात्राः ।
नेक्टाय्-कॉलर्-परिवृतगलाः क्रॉपकेप्पोत्तमांगाः
केचित् चष्मानयनयुगलाः चाक्षुषास्ते भवेयुः ॥ १५ ॥

सभ्या एते मुदितहृदया आसनेषूपविश्य
जग्ध्वा पावान् भजिविसकिटान् लीलया कंठपूरम् ।
" हमक् ब्रयांडी, व्हिसकि मुझकू, आय वांट् स्ट्रॉंग शांपेन्,
आय् लाइक् बीर् " इति सरभसं किंकरानादिशंति ॥१६॥

उक्त्वा " हां साब् " इति परिजनास्तेऽपि मंजूषिकाभ्यः
कूपीस्तास्ताः पिहितवदनाः संभ्रमेणानयंति ।
फट्कृत्यामूर्मधुरसुरया पूरयित्वा च कप्पान
तेषामग्रे सबहुविनयं स्थापयंति क्रमेण ॥ १७ ॥

पश्चात् सभ्याश्चपलनयना एकमन्वेक आशु
कप्पान् द्वौ त्रीन् नव दश मुदा कुर्वते मद्यरिक्तान् ।
तेनातृप्ताः कतिचन पुनर्बाटली सीधुपूर्णे
द्वे द्वे कंठे विदधति सखे ! केऽपि तिस्रश्चतस्रः ॥ १८ ॥

---

१ पायमोचे । २ पिंगलवर्णौ (Crimsy). ३ वस्त्रविशेषाः । ४ With crop & cap on (उत्तमांग) heads. ५ नेत्रगोचराः । ६ भक्षयित्वा । ७ अहं प्रबलं शांपेनाख्यं मद्यमपेक्षे । ८ मह्यं बीराख्यं मद्यं रोचते । ९. बाटल्या उद्घाटने फट् इति शब्दो भवति, तं कृत्वा बाटलिं उद्घाट्येत्यर्थः । १० कूपीः । ११ मद्यपूर्णे । १२ निर्गिरन्ति

केचित् स्वीयान् परमसुहृदः पीतपर्याप्तमद्यान्
"मा भो मा भो" इति सविनयं सप्रणामं ब्रुवाणान् ।
हस्तग्राहं प्रसभमवनौ पातयित्वोन्नतास्यान्
बाल्मीकिं प्रबलविसकैः प्रीतितः पाययंति ॥ १९ ॥

तेषां पीतासवपरिमलाभ्यापतन्मक्षिकौघैः
व्याप्तास्यानां गततनुधियां भ्रांतिमल्लोचनानाम् ।
शुभ्रं फेनं कष्ट ! गिरतां, व्योमलग्नेक्षणानां
व्यस्तं पीठैः सह निपततां हस्तपादं प्रसार्य ॥ २० ॥

लीलास्तास्ता नयनसुभगाः, "चर्वणं चर्वितस्य
व्यर्थं मा भूत्" इति धिषणया नाधुना वर्णयामि ।
यद्वीक्षेथा मधुरमधुरं चत्वरे रामणीयं
स्थानेऽप्यस्मिन् तव किल पतेत् दृक्पथं तादृगेव ॥ २१ ॥
( युग्मकम् )

एवंभूतां अपि दिविषदां दुर्लभां चारुतां तां
दीर्घैर्यत्नैः सुदुरधिगमां अप्रभोर्वीक्षितुं ते ।

---

१ Having caught their hands. २ पीतासवस्य पीतमद्यस्य परिमलेन अभ्यापतंतीनां सवेगं आगच्छंतीनां मक्षिकाणां ओघैः समूहैः व्याप्तास्यानां च्छन्नमुखानां तेषां मद्यपानाम्। ३ खुर्ची इत्याद्यासनैः सह व्यस्तं (at random) निपतताम् । ४ In the court yard. ५ (Scienary) सौंदर्यम् । ६ दिविषदां देवानां अपि दुर्लभाम् । ७ Beauty. ८ Un-obtainable even with great efforts. ९ चारुतां वीक्षितुं अप्रभोः असमर्थस्य । ते तव ।

" एकाक्षं मां खलु विदधता वेधसा हा हतोऽस्मी "—
त्येवंवाचो रसिक ! नियतं निःसरेयुर्मुखाब्जात् ॥ २२ ॥

ग्रामेष्वन्येष्विव सुकुलजाः केचिदेत्रापि संति,
लज्जंते ये करट ! सदनं मत्प्रियाया व्रजंतः ।
तस्मादेते यवनकुलजान् किंकरान् प्रेष्य गंजां,
इष्टं मद्यं प्रतिदिनमहो ! सायमानाययंति ॥ २३ ॥

" काकोलः खल्विह भुवि सुरा नाम, सा नैव पेया,
सर्वस्वं नुर्हरति मदिरा, मद्यपो रौरवार्हः ।
पापायास्याः स्मृतिरपि किलेत्येष" मूढप्रलापः,
विद्यात् क्लीबैः कथमिव रसं कामिनीयौवनस्य ? ॥ २४ ॥

तातो यस्याः विहग ! वरुणः पाथसां जीवनानां
नाथो, धन्वंतरिशशधरौ कौस्तुभो यत्सगर्भ्याः ।

---

१ By the creator. २ Surely. ३ Come out. ४ ते मुखाब्जात् । (Said ironically) ५. अत्रापि अस्मिन् ग्रामेऽपि । ६ म्लेंच्छकुले जातान् । ७ Cause to bring मद्यं wine. ८ विषम् । ९ नुः नरस्य । १० नरकार्हः । ११ मूर्खप्रजल्पितम् । १२ जानीयात् । १३ षंढः । १४ समुद्रः । १५ सर्वचराचरपदार्थानां जीवनभूतानां पाथसां जलानाम् । १६ धन्वंतरिः देववैद्यः शशधरः चंद्रः, कमलनिलया लक्ष्मीः, कामधेनुः, कौस्तुभः, इत्येते सर्वे समुद्रात् जाताः इति प्रसिद्धम् । १७ यस्याः [illegible]

यत्सोदर्यः कमलनिलया कामधेनु सुधा च,
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ? ॥२५॥

"शीतं मा भूत्" इति धिषणया, योनिदार्ढ्यस्य हेतोः
जातापत्याः प्रथमदिवसे हंत ! रीफॉर्मराज्ञ्याः ।
पानं यस्याः शकुन ! विदधत्याधुनिक्यस्तरुण्यः,
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ? ॥२६॥

पूर्वं भ्रातर ! विजनविपिने तापसा यस्यै हेतोः
प्राणायामैः किल विदधिरे दुःखभाक् जीवितं स्वम् ।
यस्याः पानात् भजति मनुजस्तं समाधिं सुखेन,
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ? ॥२७॥

पूर्वं श्रीमानपि, धनचयं संहरन् भिक्षते, दिग्
वासो वस्ते, स्वपिति धरणौ, बांधवान् संजहाति ।
एवं योगी भवति पुरुषो लीलया यत्प्रभावात्,
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ? ॥२८॥

---

१ यस्याः सुयायाः सोदर्यः भगिन्यः । २ सुराम् । ३ सुधा । ४ जननेंद्रियं दृढं भवतु इति उद्दिश्य । ५ प्रसूताः । ६ सुधारकाणां स्त्रियः । ७ पानं विदधति पिबंति । ८ आधुनिक्यः इदानींतनाः तरुण्यः । Young ladies of these days. ९ निर्जनारण्ये । १० यस्य समाधेः । ११ नाशयन् ।

यस्याः पानात् "निजमिदमदोऽन्यस्य, साधीय एतत्,
 नैवेदं साध्विति" लघुमतिर्मानसं संजहाति।
विस्मृत्याहं त्वमिति च नरो जायतेऽद्वैतबुद्धिः,
 जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम्? ॥२९॥

निर्लज्जाभिः सह युवतिभिः पंडिताभिर्निशायां
 सग्घेरंते तरुणतरुणा आंग्लविद्याप्रवीणाः।
आकांक्षंतः स्वसखिकुशलं *यां रमंते निपीय,
 जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम्? ॥३०॥

"कृत्स्नायासं हरति, कुरुते मानसं सुप्रसन्नं,
 गाढं रुंद्धे शमनसुहृदं प्लेगमप्यामयेशम्"।
एवं यस्याः सुविमलयशोडिंडिमो ध्वन्यतेऽत्र,
 जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ॥ ३१ ॥

प्रायः सर्वेष्वपि करट! या मिश्र्यते भेषजेषु,
 पाश्चात्येष्वाधुनिकविबुधैर्गण्यते भूसुधा या।

---

१ 'इदं निजं स्वकीयं, अदः अन्यस्य, एतत् साधीयः, इदं नैव साधु" इति लघुमतिः क्षुद्रा बुद्धिः। २ अहं त्वं इति विस्मृत्य। ३ सग्घेः सहभोजनस्य party अंते अवसाने ४ (To drink) to the health of friends. *** यां सुरां निपीय रमंते क्रीडंति** । ५ अनयोः कर्त्री मदिरा which is understood. ६ यमस्य मित्रम्। ७ Plague आमयेशं रोगश्रेष्ठं प्लेगमपि इति अन्वयः। ८ अत्र जगति। ९ पाश्चात्येषु भेषजेषु औषधेषु। १० मर्त्यलोकामृतम्।

यस्या भूपा अपि विदधते विक्रयं घोषणेन
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम् ॥३२॥

"एम्-ए-एम्-डी "-प्रभृतिपदवीर्धारयद्भिर्बुधाग्र्यैः
मुनूसफ-जजैर्नृपतिपुरुषैर्डाक्टरैः प्लीडरैश्च।
एवं सर्वैरपि जगति या सेव्यते सप्रमोदं,
जिव्हा पापा गलति न कथं निंदतां वारुणीं ताम्? ॥ ३३ ॥

"ब्र्यांडीं यो वा न पिबति, न वा मंचके यस्य रंडी,
किं तत्प्राणैः, किमु बत धनैः, विद्यया तस्य किं वा?"
इत्थं मान्ये शकुन! भुवने वारुणीवारनार्यौ
जिव्हा पापा गलति न कथं निंदतां पामराणाम्? ॥३४॥

संख्यातीतेष्वपि पतिषु, ते भ्रातृपत्नी जगत्यां
आत्मानं सा करट! सधवं हंत! मेने मयैव।
*ते हि क्रुद्धाः सुखनिलयमप्यत्यजंस्तां कदाचित्
न स्वप्नेऽपि प्रिय! पुनरहं नर्मबुध्याऽप्यकुप्यम् ॥ ३५॥

---

१ घोषणेन विक्रयं कृ=To sell by auction. २ पंडितप्रवरैः। ३ पर्यंके। ४ वेश्या। ५ तस्य प्राणैः। ६ "वारुणीवारनार्यौ:" विशेषणम्। ७ "निंदतां" इत्यस्य कर्म। ८ Innummerable. ९ Your brother's *i. e.* my wife (मदिरा wine). १० जगति। ११ सा मदिरा आत्मानं मयैव सधवं सपतिं मेने अमन्यत Thought. १२ सुखाश्रयभूताम। १३ सुराम् १४ Even in joke. * अन्ये पतयः।

स्नाने पाने शकुन ! शयने भोजने वाऽऽसने वा
सायं वोषस्यहनि निशि वा जाग्रदाहो स्वपन् वा ।
गेहे द्वारे सखिसमुदये निर्जने वाऽपि देशे
पण्यस्थाने पथि च न सुरां व्यस्मरं प्रेयसीं मे ॥ ३६ ॥

किंतु स्वप्नेऽप्यहह ! न मया शंकितो यः कदापि
सोऽयं तस्या विरहदहनो दैवतो मय्यपप्तत् ।
अस्यां नूनं विपदि कटु मे प्राक्तनं कर्म हेतुः ।
हा ! हा ! हाला ध्रुवमपहृता पाणितः कस्यचित् स्यात् ॥ ३७ ॥

मातुर्मृत्योर्जनकमरणात्, दारनाशात्, सुतानां
हानेर्वा, मे न खलु हृदयं विव्यथे लेशतोऽपि ।
कादंबर्याः परमयमहो ! विप्रयोगो नितांतं
जातोऽक्षम्यः, प्रियमपि शुचे विप्रयोगे हि वस्तु ॥ ३८ ॥

प्रेक्षे जीर्णं वनमिव जगत्, किं करोमि ? क्व यामि ?
मन्ये श्रेयो मरणमहहा !! जीवनादीदृशात् मे ।
किंतु प्राणान् कथमपि खलान् धारये, वर्षकल्पान्
घस्रान् एतान् करट ! गणयन्, जीवतंतुः किलाशा ॥ ३९ ॥

---

१ वा+उषसि प्रातः । २ जाग्रत्+आहो । जाग्रत् and स्वपन् are the adj. of अहं, the subject of व्यस्मरम्, which is understood. आहो means वा. ३ In the Market. ४ विरहाग्निः । ५ मयि अपप्तत् अपतत् । ६ असाधु 'कर्म' इत्यनेन संबध्यते। ७ पूर्वजन्मनि कृतम् । ८ सुरा । ९ पूर्व जन्मनि इति शेषः १० प्रियं अपि वस्तु । ११ शोकाय, भवतीति शेषः १२ विरहे । १३ वर्षसदृशान् । १४ दिवसान् 'गणयन्' इत्यस्य कर्म ।

मन्नेत्राभ्यां वहति सततं कोष्णबाष्पप्रवाहः
निद्राभावात् वपुरिदमभूत् अस्थिमात्रावशेषम् ।
नान्नं नांभो भवति रुचये चिंतनात् हंत ! यस्याः
तां मे प्रेष्ठां मधुरमदिरां काक ! वीक्षे कदा नु ? ॥४०॥

भ्रातुः पत्न्या अपि तव मयि प्रीतिरेवंविधैव ,
नूनं सा च प्रबलमबला सोढुमेनं वियोगम् ।
तस्मात् गत्वा द्रुततरमितो ब्रूहि संदेशमेतं
येन प्राण्यात् कथमपि ममामोचनं व्याकुलाऽपि ॥४१॥

*एकाक्षं मां परमसुहृदं विद्धि ते वल्लभस्य ,
भ्रातुर्जाये ! तिमिरवपुषैवान्यथा मा स्म मंस्थाः ,
कारागारे वसति दयितस्तावकीनः सुखेन ,
चिंतामल्पामपि नहि वहेत् श्रीमती तस्य हेतोः ॥ ४२ ॥

मध्याह्ने बंद्युचितवसनैर्मंडितांगोऽद्य देवि !
स्तंबघ्नांसः करधृतपिटः श्मश्रुचूडाविहीनः ।
निस्तेजस्को निगडितपदो रक्षकाधिष्ठितश्च
मार्गे यातो मम स सहसा दृक्पथं वल्लभस्ते ॥ ४३ ॥

---

१ असह्यं, वियोगं इत्यस्य विशेषणम् । २ प्राणान् धारयेत् । ३ मम आमोचनं यावदहं इतो मोक्ष्ये तावत् । ४ दुःखव्याकुला, सा सुरा इति शेषः ।

*** इतः संदेशप्रस्तावः ।**

५ तिमिरवपुषा एव मम शरीरं कृष्णमस्तीत्येतावतैव मां अन्यथा मा स्म मंस्थाः मा गृहाण । ६ वल्लभः । ७ With spade on his shoulder. ८ With basket in the hand.

मामालोक्य प्रियसखि ! चिरात् आत्मनः पूर्वमित्रं
हर्षोत्फुल्लः पुलकिततनुर्मन्मुखासक्तदृष्टिः ।
स्मारं स्मारं तव गुणगणान् बाष्पसंरुद्धकंठो
नैजं क्षेमं हरति तदिदं त्वन्मुदे मन्मुखेन ॥ ४४ ॥
*वृष्ट्यां, वायौ, तपति तरणौ आप्रभातंप्रदोषं
कार्यं कुर्वन्, सुतनु ! वटिते लेशतोऽपि प्रमादे ।
लत्ताघातैः प्रबलल्गुडैर्निर्दयं ताडयमानो
रक्षामत्यैस्तत्र पतिरयं मंगलं पृच्छति त्वाम् ॥ ४५ ॥
नैकच्छिद्रं परिदधदयं चीरकं खादिसंज्ञं
रूक्षे जीर्णे निशि सुमलिने कंबले क्षिप्तगात्रः ।
चंडैर्दंशैः प्रखरमशकैर्मत्कुणैर्दश्यमानः
कारागारे जयति कुशली भूसुधे ! वल्लभस्ते ॥ ४६ ॥
प्रातः सायं पृथगुपहृते देवि ! राजतपलांडू
भास्कर्यौ द्वे प्रतिदिनमयं भक्षयन् यातयामे ।
शिष्टं तुंदं जयतु मदिरेत्येवमुद्घोष्य तोयैः
पिप्रत् कांतो वसति कुशली तावको बंदिगेहे ॥ ४७ ॥

---

१ After a long time. २ वक्ष्यमाणम् | ३ तवह र्षाय| ***अथ संदेशः**।
४ तरणौ रवौ तपति सति | ५ From morning till evening.
६ Even the slightest guilt being committed. ७ रक्षा-
मत्यैः by Police ताडयमानः अयं तव पतिः ' अहम् ' | ८ नैकानि छिद्रा-
णि यस्मिन् तत् चीरकं वसनम् । ९ अयं ते वल्लभः ' अहम् ' | १० तदा-
ख्यो वसनविशेषः । ११ कीटविशेषाः । १२ पृथक् पृथक् प्रातश्च सायं च
उपहृते दत्ते भास्कर्यौ । १३ शुभ्रपलांडू | १४ Stale. १५ "मदिरा जयतु"
इत्येवं उद्घोष्य उच्चैर्गर्जनां कृत्वा | १६ जलैः | १७ तुंदं उदरं पूरयन् |
१८ पतिः अहम् |

स्थाने चास्मिन् किमपि न भयं चोरतो वाऽन्यतो वा,
पांतीदं नः सदनमनिशं रक्षकाः शस्त्रहस्ताः ।
मा मा चिंतामपि मम कृथाः, याम्यहं यत्र यत्र
तत्रान्वीये प्रहरणकरैः सैनिकैर्जागरूकैः ॥ ४८ ॥

मासे मासे द्युमणिदिवसे मुंड्यते मस्तकं मे,
सप्ताहे द्विः किल सरजनो वीक्षितुं मामुपैति ।
संप्राप्नोमि प्रतिरविदिनं सुभ्रु ! विश्रांतिसौख्यं ,
एषोऽशेषः सुखसमुदयः केवलं त्वत्प्रसादात् ॥ ४९ ॥

सूर्यास्तात् प्राक् प्रतिदिनमहं देवि ! भुंजेऽत्र सायं,
येनास्ये मे न खलु कृमयो, नापि कीटा विशंति ।
जातोऽस्म्येवं हृदयदयिते ! नन्वबुद्धोऽपि बुद्धः ,
एषोऽशेषः सुखसमुदयः केवलं त्वत्प्रसादात् ॥ ५० ॥

अत्रत्या मां अधिकृतजनाः कर्म यत् कारयंति
तद्धेतोस्ते किमपि ददते वेतनं नैव मह्यम् ।
एवं नित्यं सुतनु ! घटते कर्म निष्कामबुद्ध्या ,
सर्वश्चायं सुखसमुदयः केवलं त्वत्प्रसादात् ॥ ५१ ॥

---

१ पांति रक्षंति | २ इदं नः सदनं कारागृहम् | ३ मम अपि | ४ अन्वीये अनुगम्ये | ५ शस्त्रहस्तैः ६ रविवासरे | ७ My head is shaved. ८ Week. ९ Twice. १० Surgeon. ११ To examine. १२ Pleasure of leave. १३ आस्ये मुखे | १४ अहं गौतमबुद्धभिन्नोऽपि दिवैव भोजनात् गौतमबुध्दः संवृत्तः | बौध्दा हि इदानींमपि दिवैव भुंजते न रात्रौ | १५ The officers here. १६ Which work ( the officers ) cause me to do. १७ तस्य [illegible] कृते | १८ मजूरी |

जलधितनये ! संततोद्योगतश्च
काश्चित् वपुषि न पदं मे कदाप्यादधाति ।
स्म्यहमनलसो नीरुजोऽस्थूलदेहः,
ः सुखसमुदयः केवलं त्वत्प्रसादात् ॥ ९२ ॥

मपि मंदिरे ! कर्तुमासं पुरेति
न् प्रथममयुनक् जेलरः पेषणे माम् ।
र्गीं तत्कलाभिज्ञवर्गे,
समुदयः केवलं त्वत्प्रसादात् ॥ ९३ ॥

मिति, तथा ताडितोऽहं कदाचित्
मम खलु यथा प्राशैवत् सर्वतोऽसृक् ।
ो दैत्यवैरीव नूनं,
मुदयः केवलं त्वत्प्रसादात् ॥ ९४ ॥

कृष्येकदा मंतुमेकं
क्षिप्तः सतमोसि गृहे मासमेकं न्यवात्सम् ।

---

१ A[illegible]ive. २ Healthy. ३ Lean. ४ प्रथमं आदौ अयुनक् appointed. ५ कारागाराधिप. Jailor. ६ पेषणकर्मणि In the work of grinding jwari. etc. ७ अविंदं आप्नवम् । ८ First number ९ पेषणकलाप्रवीणेषु । १० अपराधः । ११ अवहत् । १२ रक्तम् Blood. १३ दैत्यस्य हिरण्यकशिपोः वैरी अपरो नृहरिः नरसिंह इव अशोभे । हिरण्यकशिपौ हते भगवतो नरसिंहस्य देहः शोणितशोणो बभूवेति भागवतात् ज्ञा । १४ Greater; adj to मंतुम् । १५ अकृषि अकरवम् १६ अपराधम्. Black-hole. १८ अवसम् ।

किं व्याचक्षे सुखमनुपमं यत् मयेहानुभूतं
मन्ये भूमौ अहमिव सुरे ! हंत धन्योऽह॰ ॰यतो वा,
॰: ।
*नाथो यावत् न्यवसदिह ते, तावदस्योष्ण
'पीडा मा भूत्' इति तदररं जातु नैव ॰त्र
अन्नं स्वल्पं सकृदिह ददुः प्रत्यहं द्वाररंध्रात् ॥ ४८ ॥
विण्मूत्रादीनपि गुणनिधेऽकारयन् मा॰,
आसीत् अस्मिन् तिमिरसदने न प्रका॰मामुपैति ।
याता दृष्टिः किल विफलतां, ध्वां॰तिसौख्यं,
जातो देहो मम सपिटकः कीटकैर्दश॰ ॰सादात् ॥ ४९ ॥
विण्मूत्राणां परिमलमहं नन्वजिघ्रं॰ भुंजेऽत्र सायं,
"धन्यः कोऽन्यो भुवि ? मयि सुरा॰ कीटा विशंति ।
देव्यास्तस्याः कथमनृणतां पामरो॰ऽपि बुद्धः,
एवं प्रेम्णा त्वयि वितरता धन्यवादा॰ त्वत्प्रसादात् ॥ ५० ॥
ध्वांतागारे कथमपि मया यापि॰त् कारयंति

पश्चान्मुक्तस्तिमिरगृहतः क्षीयमाणांगयष्टिः
भ्रष्टभ्रूणा वरतनुरिव प्राप्नवं पांडिमानम् । ॥

---

* ते तव नाथ : अहं इत्थं : इह तमोगृहे न्यवसत् ।

१ उष्णरश्मेः सूर्यात् । २ तस्य तमोगृहस्य अरं द्वारम् । ३ न ए॰ ४ अन्वीये
was not opened. ४ हे गुणनिधे । ५ मां इह अस्मिन् ॰ shaved.
एव । ६ Black-hole. ७ अंधकारः । ८ Fragrance, ॰ examine.
smell. १० How shall I be out of debt of m॰ ॰गौतमबुद्धभिन्नोऽ
*i. e.* wine? ११ Was passed. १२ Being lean, ॰पि दिवैव भुंजते
१४ स्त्रीं । १५ शुभ्रताम् । ॰n work ( the
॰कृते । १८ मजूरी ।